## त ऐक्षन्तास्माकमेवायं

[पदभाष्यम्] नार्थं वाख्यायिका। यथा देवानां जयाद्यभिमानस्तद्वदिति। ब्रह्म यथोक्तलक्षणं परं ह किल देवेभ्योऽर्थाय विजिग्ये जयं लब्धवद्देवानामसुराणां

[वाक्यभाष्यम्] युक्तम्। न तु पुनः पदार्था वाक्यशतेनापि देशान्तरे कालान्तरे वा स्वं स्वं स्वभावं जहति नहि देशकालान्तरेषु चाग्निरनुष्णो भवति। एवं कर्मणोऽपि कालान्तरे फलं द्विप्रकारमेवोपलभ्यते। बीजक्षेत्रसंस्कारपरिरक्षाविज्ञानवत्कर्त्रपेक्षफलं कृष्यादि विज्ञानवत्सेव्यबुद्धिसंस्कारापेक्षफलं च सेवादि। यागादेः कर्मणस्तथाविज्ञानवत्कर्त्रपेक्षफलत्वानुपपत्तौ कालान्तरफलत्वात्कर्मदेशकालनिमित्तविपाकविभागज्ञबुद्धिसंस्कारापेक्षं फलं भवितुमर्हति। सेवादिकर्मानुरूपफलज्ञसेव्यबुद्धिसंस्कारापेक्षफलस्येव। तस्मात्सिद्धः सर्वज्ञ ईश्वरः सर्वजन्तुबुद्धिकर्मफलविभागसाक्षी सर्वभूतान्तरात्मा। "यत्साक्षादपरोक्षात्" बृ० ३।४।१ "य आत्मा सर्वान्तर" बृ० ३।४।१ इति श्रुतेः। स एव चात्रात्मा जन्तूनां "नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता" बृं० ३।७।२३ "नान्यदतोऽस्ति विज्ञातृ" बृ० ३।८।११ इत्याद्यात्मान्तरप्रतिषेधश्रुतेः "तत्त्वमसि" छा० ६।८।७ इति चात्मत्वोपदेशात्। न हि मृत्पिण्डः काञ्चनात्मत्वेनोपदिश्यते। ज्ञानशक्तिकर्मोपास्योपासकशुद्धाशुद्धमुक्तामुक्तभेदादात्मभेद एवेति चेन्न। भेददृष्टयपवादात्। यदुक्तं संसारिण ईश्वरादनन्या इति। तन्न। किं तर्हि भेद एव संसार्यात्मनाम्। कस्माल्लक्षणभेदादश्वमहिषवत्। कथं लक्षणभेद इत्युच्यते। ईश्वरस्य तावन्नित्यं सर्वविषयं ज्ञानं सवितृप्रकाशवत्। तद्विपरीतं संसारिणां खद्योतस्येव। तथैव शक्तिभेदोऽपि। नित्या सर्वविषया चेश्वरशक्तिर्विपरीतेतरस्य। कर्म च चित्स्वरूपात्मसत्तामात्रनिमित्तमीश्वरस्य। औष्ण्यस्वरूपद्रव्यसत्तामात्रनिमित्तदहनकर्मवत्। राजायस्कान्तप्रकाशकर्मवच्च स्वात्माविक्रियारूपम्। विपरीतमितरस्य। "उपासीत" छा० ३।१४।१ इतिवचनादुपास्य ईश्वरो गुरुराजवत्। उपासकश्चेतरः शिष्यभृत्यवत्। अपहतपाप्मादिश्रवणान्नित्यशुद्ध ईश्वरः। "पुण्यो वै पुण्येन" बृ० ३।२।१३ इति वचनाद्विपरीत इतरः। अत एव नित्यमुक्त एवेश्वरो नित्यशुद्धियोगात्संसारीतरः। अपिच यत्र ज्ञानादिलक्षणभेदोऽस्ति तत्र भेदो दृष्टः। यथाश्वमहिषयोस्तथा ज्ञानादिलक्षणभेदादीश्वरादात्मनां भेदोऽस्तीति चेन्न। कस्मात्। "अन्योऽ-

विजयोऽस्माकमेवायं

[पदभाष्यम्] च सङ्ग्रामेऽसुराञ्जित्वा जगदरातीनीश्वरसेतुभेत्तॄन्देवेभ्यो जयं तत्फलं च प्रायच्छज्जगतः स्थेम्ने । तस्य ह किल ब्रह्मणो विजये देवा

[वाक्यभाष्यम्] सावन्योऽहमस्मीति न स वेद" "ते क्षय्यलोका भवन्ति।" छा.७।२५।२ मृत्योः स मृत्युप्राप्नोति" बृ० ४।४।१९ इति भेददृष्टिर्ह्यपोह्यते। एकत्वप्रतिपादिन्यश्च श्रुतयः सहस्रशो विद्यन्ते। यदुक्तं ज्ञानादिलक्षणभेदादित्यत्रोच्यते नानभ्युपगमात्। बुद्ध्यादिभ्यो व्यतिरिक्ता विलक्षणाश्चेश्वराद्भिन्नलक्षणा आत्मानो न सन्ति। एक एवेश्वरश्चात्मा सर्वभूतानां नित्यमुक्तोऽभ्युपगम्यते। बाह्यश्चक्षुर्बुद्ध्यादिसमाहारसंतानाहंकारममत्वादिविपरीतप्रत्ययप्रबन्धाविच्छेदलक्षणो नित्यशुद्धबुद्धमुक्तविज्ञानात्मेश्वरगर्भो नित्यविज्ञानावभासश्चित्तचैत्यबीजबीजिस्वभावः कल्पितोऽनित्यविज्ञान ईश्वरलक्षणविपरीतोऽभ्युपगम्यते। यस्याविच्छेदे संसारव्यवहारः। विच्छेदे च मोक्षव्यवहारः। अन्यश्च मृत्प्रलेपवत्प्रत्यक्षप्रध्वंसो देवपितृमनुष्यादिलक्षणो भूतविशेषसमाहारो न पुनश्चतुर्थोऽन्यो भिन्नलक्षण ईश्वरादभ्युपगम्यते। बुद्ध्यादिकल्पितात्मव्यतिरेकाभिप्रायेण तु लक्षणभेदादित्याश्रयासिद्धो हेतुः। ईश्वरादन्यस्यात्मनोऽसत्त्वात्। ईश्वरस्यैव विरुद्धलक्षणत्वमयुक्तमिति चेत्सुखदुःखादियोगश्च। न निमित्तत्वे सति लोकविपर्ययाध्यारोपणात्सवितृवत्। यथा हि सविता नित्यप्रकाशरूपत्वाल्लोकाभिव्यक्त्यनभिव्यक्तिनिमित्तत्वे सति लोकदृष्टिविपर्ययेणोदयास्तमयाहोरात्रादिकर्तृत्वाध्यारोपभाग्भवत्येवमीश्वरे नित्यविज्ञानशक्तिरूपे लोकज्ञानापोहसुखदुःखस्मृत्यादिनिमित्तत्वे सति लोकविपरीतबुद्ध्याध्यारोपितं विपरीतलक्षणत्वं सुखदुःखादयश्च न स्वतः। आत्मदृष्ट्यनुरूपाध्यारोपाच्च। यथा घनादिविप्रकीर्णेऽम्बरे येनैव सवितृप्रकाशो न दृश्यते स आत्मदृष्ट्यनुरूपमेवाध्यस्यति सवितेदानीमिह न प्रकाशयतीति सत्येव प्रकाशेऽन्यत्र भ्रान्त्या। एवमिह बौद्धादिवृत्त्युद्भवाभिभवाकुलभ्रान्त्याध्यारोपितः सुखदुःखादियोग उपपद्यते। तत्स्मरणाच्च। तस्यैवेश्वरस्यैव हि स्मरणम्। "मत्तः स्मृतिर्ज्ञानमपोहनं च" भ.गी.१५।१५

---

१ मृत्प्रलेपवदित्यस्य स्थाने मृत्प्र[illegible]वदिति पाठः।

महिमेति ॥ [ १४ ] १ ॥

[पदभाष्यम्] अग्न्यादयोऽमहीयन्त महिमानं प्राप्नुवन्तस्तदात्मसंस्थस्य प्रत्यगात्मन ईश्वरस्य सर्वज्ञस्य सर्वक्रियाफलसंयोजयितुः प्राणिनां सर्वशक्तेर्जगतः स्थितिं चिकीर्षोरयं जयो महिमा चेत्यजानन्तस्ते देवा ऐक्षन्तेक्षितवन्तोऽग्न्यादिस्वरूपपरिच्छिन्नात्मकृतोऽस्माकमेवायं महिमाग्निवाय्विन्द्रत्वादिलक्षणो जयफलभूतोऽस्माभिरनुभूयते नास्मत्प्रत्यगात्मभूतेश्वरकृत इत्येवं मिथ्याभिमानेक्षणवताम् ॥ [१४] १ ॥

[वाक्यभाष्यम्] "नादत्ते कस्यचित्पापम्" भ. गी. ५।१५ इत्यादि । अतोनित्यमुक्त एकस्मिन्सवितरीव लोकाविद्याध्यारोपितमीश्वरे संसारित्वम् । शास्त्रादिप्रामाण्यादभ्युपगतमसंसारित्वमित्यविरोध इति । एतेन प्रत्येकं ज्ञानादिभेदः प्रत्युक्तः । सौक्ष्म्यचैतन्यसर्वगतत्वाद्यविशेषे च भेदहेत्वभावात् । विक्रियावत्त्वे चानित्यत्वात् । मोक्षे च विशेषानभ्युपगमादभ्युपगमे चानित्यत्वप्रसंगात् । अविद्यावदुपलभ्यत्वाच्च भेदस्य तत्क्षयेऽनुपपत्तिरिति सिद्धमेकत्वं तस्माच्छरीरेन्द्रियमनोबुद्धिविषयवेदनासंतानस्याहंकारसंबन्धादज्ञानबीजस्य नित्यविज्ञानान्यनिमित्तस्यात्मतत्त्वयाथात्म्यविज्ञानाद्विनिवृत्तावज्ञानबीजस्य विच्छेद आत्मनो मोक्षसंज्ञा विपर्यये च बन्धसंज्ञा । स्वरूपापेक्षत्वादुभयोः । ब्रह्म ह, इत्यैतिह्यार्थः । पुरा किल देवासुरसंग्रामे जगत्स्थितिपरिपिपालयिषयात्मानुशासनानुवर्तिभ्यो देवेभ्योऽर्थिभ्योऽर्थाय विजिग्येऽजैषीदसुरान्ब्रह्मण इच्छानिमित्तो विजयो देवानां बभूवेत्यर्थः । तस्य ह ब्रह्मणो विजये देवा अमहीयन्त । यज्ञादिलोकस्थित्यपहारिष्वसुरेषु पराजितेषु देवा वृद्धिं पूजां वा प्राप्तवन्तः ॥ [१४] १ ॥

[प्रकाशिका] देवानामर्थे दैत्यादीन्विजिग्ये व्यजयत । हेति निश्चितमेतदित्यर्थः । अथ विजयानन्तरं तस्य देवेष्वाविष्टस्य ब्रह्मणो विजये सति देवा अमहीयन्तापूज्यन्त । महीङ् पूजायाम् । "कण्ड्वादिभ्यो यक्" पा. सू. ३।१।२७ इति यक्प्रत्ययः । गर्विणोऽभवन्निति भावः । हेत्याश्चर्ये । ब्रह्मणो विजये कुतो देवानां गर्व इत्येतदेव व्यनक्ति—त इति । देवा अस्माकमेवायं विजयोऽस्माकमेवायं महिमेत्यैक्षन्त व्यजानन् ॥ १ ॥

तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न
व्यजानत किमिदं यक्षमिति ॥ [१५] २ ॥

[पदभाष्यम्] तद्ध किलैषां मिथ्येक्षणं विजज्ञौ विज्ञातवद्ब्रह्म । सर्वेक्षितृ हि तत्सर्वभूतकरणप्रयोक्तृत्वाद्देवानां च मिथ्याज्ञानमुपलभ्य मैवासुरवद्देवा मिथ्याभिमानात्पराभवेयुरिति तदनुकम्पया देवान्मिथ्याभिमानापनोदनेनानुगृह्णीयामिति तेभ्यो देवेभ्यो ह किलार्थाय प्रादुर्बभूव स्वयोगमाहात्म्यनिर्मितेनात्यद्भुतेन विस्मापनीयेन रूपेण देवानामिन्द्रियगोचरे प्रादुर्बभूव । तत्प्रादुर्भूतं ब्रह्म न व्यजानत नैव विज्ञातवन्तो देवाः । किमिदं यक्षं पूज्यं महद्भूतमिति ॥ [१९] २ ॥

ते तदजानन्तो देवाः सान्तर्भयास्तद्विजिज्ञासवोऽग्निमग्रगामिणं जातवेदसं सर्वज्ञकल्पमब्रुवन्नुक्तवन्तो हे जातवेद एतदस्मद्गोचरस्थं यक्षं विजानीहि विशे-

[वाक्यभाष्यम्]त ऐक्षन्तेति मिथ्याप्रत्ययत्वाद्धेयत्वख्यापनार्थमाम्नायः । ईश्वरनिमित्ते विजये स्वसामर्थ्यनिमित्तोऽस्माकमेवायं विजयोऽस्माकमेवायं महिमेत्यात्मनो जयादि श्रेयोनिमित्तं सर्वात्मानमात्मस्थं सर्वकल्याणास्पदमीश्वरमेवात्मत्वेनाबुद्ध्वा पिण्डमात्राभिमानाः सन्तो यं मिथ्याप्रत्ययं चक्रुस्तस्य पिण्डमात्रविषयत्वेन मिथ्याप्रत्ययत्वात्सर्वात्मेश्वरयाथात्म्यावबोधेन हातव्यताख्यापनार्थस्तद्धैषामित्याद्याख्यायिकाम्नायः । तद्ब्रह्म ह किलैषां देवानामभिप्रायं मिथ्याहंकाररूपं विजज्ञौ विज्ञातवत् । ज्ञात्वा च मिथ्याभिमानशातनेन तदनुजिघृक्षया देवेभ्योऽर्थाय तेषामेवेन्द्रियगोचरे नातिदूरे प्रादुर्बभूव । महेश्वरशक्तिमायोपात्तेनात्यन्ताद्भुतेन प्रादुर्भूतं किल केनचिद्रूपविशेषेण । तत्किलोपलभमाना अपि देवा न व्यजानत न विज्ञातवन्तः । किमिदं यदेतद्यक्षं पूज्यमिति ॥ [१९] २ ॥

तद्विज्ञानायाग्निमब्रुवन् । तृणनिधानेऽयमभिप्रायोऽत्यन्तसंभावितयोरग्निमारुतयोस्तृणदहनादानाशक्त्यात्मसंभावना शातिता भवेदिति । इन्द्रआदि-

[प्रकाशिका] एषां देवानां तदासुरावेशकृतेश्वराज्ञाननिमित्तमहंकारादिकं जज्ञौ व्यजानाद्ब्रह्मेत्यनुषङ्गः । तेभ्यो देवेभ्योऽर्थे देवानां स्वात्मतत्त्वबोधाय यक्षरूपतया प्रादुर्बभूव ब्रह्मेत्यर्थः । तद्यक्षरूपं ब्रह्मेदं किमिति न व्यजानत न व्यजानन् ॥ २ ॥

तेऽग्निमब्रुवञ्जातवेद एतद्विजानीहि
किमेतद्यक्षमिति तथेति ॥ [१६] ३ ॥
तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा
अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥[१७] ४॥
तस्मिंस्त्वयि किं वीर्यमित्यपीदꣳ सर्वं
दहेयं यदिदं पृथिव्यामिति ॥ [१८]५ ॥
तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय
सर्वजवेन तन्न शशाक दग्धुं स तत एव
निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ [१९] ६ ॥

[पदभाष्यम्] यतो बुध्यस्व त्वं नस्तेजस्वी किमेतद्यक्षमिति। तथास्त्विति तद्यक्षमभ्यद्रवत्तत्प्रतिगतवानग्निः। तं च गतवन्तं पिपृच्छिषु तत्समीपेऽप्रगल्भत्वात्तूष्णींभूतं तद्यक्षमभ्यवददग्निं प्रत्यभाषत कोऽसीति। एवं ब्रह्मणा पृष्टोऽग्निरब्रवीदग्निर्वा अग्निनामाहं प्रसिद्धो जातवेदा इति च नामद्वयेन प्रसिद्धतयात्मानं श्लाघयन्। इत्येवमुक्तवन्तं ब्रह्मावोचत्तस्मिन्नेवं प्रसिद्धगुणनामवति त्वयि किं वीर्यं सामर्थ्यमिति। सोऽब्रवीदिदं जगत्सर्वं दहेयं भस्मीकुर्याम्। यदिदं स्थावरादि पृथिव्यामिति। पृथिव्यामित्युपलक्षणार्थं यतोऽन्तरिक्षस्थमपि दह्यत एवाग्निना। तस्मा एवमभिमानवते ब्रह्म तृणं निदधौ पुरोऽग्नेः स्थापितवद्ब्रह्मैतत्तृणमात्रं ममाग्रतो दह न चेदस्य दग्धुं समर्थो मुञ्च दग्धृत्वाभिमानं सर्वत्रेत्युक्तस्तत्तृणमुपप्रेयाय तृणसमीपं गतवान्सर्वजवेन सर्वोत्साहकृतेन वेगेन गत्वा न शशाक नाशकद्दग्धुं स जातवेदास्तृणं दग्धुमशक्तो व्रीडितो हतप्रतिज्ञस्तत एव यक्षादेव तूष्णीं देवान्प्रति निववृते निवृत्तः प्रतिगतवान्। नैतद्यक्षमशकं शक्तवानहं विज्ञातुं विशेषतो यदेतद्यक्षमिति ॥ [१६]३॥ [१७]४॥ [१८]५॥ [१९]६॥

[वाक्यभाष्यम्]त्यो वज्रभृद्वा। अविरोधात्। इन्द्रोपसर्पणे ब्रह्म तिरोदध इत्यत्रायमभिप्रायः—इन्द्रोऽहमित्यधिकतमोऽभिमानोऽस्य सोऽहमग्न्यादिभिः प्राप्तं वाक्संभाषणमात्रमप्यनेन न प्राप्तोऽस्मीत्यभिमानं कथं न नाम जह्यादिति।

[ प्रकाशिका ] ते देवा अग्निमब्रुवञ्जातवेद एतद्यक्षं किमिति विजानीहीति तथेत्युक्त्वा ॥ ३ ॥

अथ वायुमब्रुवन्वायवेतद्विजानीहि
किमेतद्यक्षमिति तथेति ॥ [२०] ७ ॥

तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा
अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ॥ [२१] ८॥

तस्मिꣳस्त्वयि किं वीर्यमित्यपीदꣳ
सर्वमाददीय यदिदं पृथिव्यामिति ॥ [२२]९ ॥

तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रे-
याय सर्वजवेन तन्न शशाकादातुं स तत
एव निववृते नैतदशकं विज्ञातुं यदे-
तद्यक्षमिति ॥ [२३] १० ॥

[पदभाष्यम्] अथ वायुमित्यथानन्तरं वायुमब्रुवन्हे वायवेतद्विजानीत्यादि समानार्थं पूर्वेण । वानाद्गमनाद्गन्धनाद्वायुः । मातर्यन्तरिक्षे श्वयतीति मातरिश्वा । इदं सर्वमप्याददीय गृह्णीयाम् । यदिदं पृथिव्यामित्यादि समानमेव ॥ [२०]७॥ [२१]८॥ [२२]९॥ [२३]१०॥

[वाक्यभाष्यम्]तदनुग्रहायैवान्तर्हितं तद्ब्रह्म बभूव ॥[१६]३॥[१७]४॥[१८]५॥ [१९]६॥ [२०]७॥ [२१]८॥ [२२]९॥ [२३]१०॥ [२४]११॥ स शान्ताभिमान इन्द्रोऽत्यर्थं ब्रह्म विजिज्ञासुर्यस्मिन्नाकाशे ब्रह्मणः प्रादुर्भाव आसीत्तिरोधानं च तस्मिन्नेव स्त्रियमतिरूपिणीं विद्यामाजगाम । अभिप्रायो-

[प्रकाशिका] अग्निस्तद्यक्षमाभिमुख्येनाद्रवदगमत् । तद्यक्षमभिमुखमागतमग्निं कोऽसीत्यवदत् । अग्निरहमस्मि जातवेदा अहमस्मीत्याग्निरब्रवीत् । वै प्रसिद्धौ । एतन्नाम ममेत्यर्थः । तस्मिंस्त्वयि तादृशे त्वयि किं वीर्यमिति यक्षमब्रवीत् । यदिदं पृथिव्यामस्ति सर्वमपीदं दहेयमित्यग्निरब्रवीत् । तस्मा अग्नय एतद्दहेत्युक्त्वा किंचित्तृणं तत्पुरतो निदधौ यक्षमित्यर्थः । तत्तृणं दग्धुं सर्वजवेन सर्ववेगेनोपप्रेयाय समीपमगमत् । गत्वा तन्न शशाक दग्धुं सोऽग्निः । तत एव तावन्मात्रत एव यक्षरूपमवधार्य निववृते निवृत्तवान्निवृत्य च देवानब्रवीत् । यदेतद्यक्षमित्येतद्विज्ञातुं नाशकमिति । अथानन्तरं वायुं प्राग्वद्व्याख्या । आददीयाद्द्यामित्यर्थः ॥४॥५॥६॥७॥८॥९॥१०॥

अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति
तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ॥ [२४] ११॥
स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमा-
नामुमाꣳ हैमवतीं ताꣳ होवाच किमेतद्यक्षमिति
॥ [२५] १२ ॥ इति तृतीयः खण्डः ॥ ३ ॥

[पदभाष्यम्] अथेन्द्रमिति । अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहीत्यादि पूर्ववत् । इन्द्रः परमेश्वरो मघवान्बलवत्त्वात्तथेति तदभ्यद्रवत्तस्मादिन्द्रादात्मसमीपं गतात्तद्ब्रह्म तिरोदधे तिरोभूतमिन्द्रस्येन्द्रत्वाभिमानोऽतितरां निराकर्तव्य इत्यतः संवादमात्रमपि नादाद् ब्रह्मेन्द्राय तद्यक्षं यस्मिन्नाकाश आकाशप्रदेश आत्मानं दर्शयित्वा तिरोभूतमिन्द्रश्च ब्रह्मणस्तिरोधानकाले यस्मिन्नाकाश आसीत्स इन्द्रस्तस्मिन्नेवाकाशे तस्थौ । किं तद्यक्षमिति ध्यायन्न निववृतेऽग्न्यादिवत्तस्येन्द्रस्य यक्षे भक्तिं बुद्ध्वा विद्योमारूपिणी प्रादुरभूत् स्त्रीरूपा । स इन्द्रस्तामुमां बहुशोभमानां सर्वेषां हि शोभमानानां शोभनतमा विद्या तदा बहुशोभमानेति विशेषणमुपपन्नं भवति। हैमवतीं हेमकृताभरणवतीमिव बहुशोभमानामित्यर्थः । अथवोमैव हिमवतो दुहिता हैमवती नित्यमेव सर्वज्ञेनेश्वरेण सह वर्तत इति ज्ञातुं समर्थेति कृत्वा तामुपजगाम । इन्द्रस्तां होमां किलोवाच पप्रच्छ ब्रूहि किमेतद्दर्शयित्वा तिरोभूतं यक्षमिति ॥ [ २४ ] ११ ॥ [ २५ ] १२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ
केनोपनिषत्पदभाष्ये तृतीयः खण्डः ॥ ३ ॥

[वाक्यभाष्यम्] ह्रोधहेतुत्वाद्रुद्रपत्न्युमा हैमवतीव सा शोभमाना विद्यैव । विरूपोऽपि विद्यावान्बहु शोभते ॥ [२५]१२॥ इति तृतीयः खण्डः ॥३॥

[प्रकाशिका] तस्मात्तिरोदधे तस्मात्प्रदेशादन्तर्हितमभूदिति वा । स इन्द्रस्तस्मिन्नेव यक्षतिरोधानाकाशप्रदेशे यक्षेणोपदेशार्थं स्थापितां स्त्रियं दृष्ट्वाजगाम तत्समीपं प्राप्तवान् । सा केत्यत-उक्तं बहुशोभमानां हैमवतीं हिमवतः पुत्रीमेतद्यक्षं किमिति तां स्त्रियमुवाच पप्रच्छेत्यर्थः ॥ ११ ॥ १२ ॥

इति तृतीयः खण्डः ॥

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये मही-
यध्वमिति ततो हैव विदांचकार ब्रह्मेति॥ [२६] १॥
तस्माद्वा एते देवा अतितरामिवान्यान्देवान्यद-
ग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुस्ते ह्येनत्प्रथमो

[पदभाष्यम्] सा ब्रह्मेति होवाच ह किल ब्रह्मण ईश्वरस्यैव विजय ईश्वरेणैव जिता असुरा यूयं तत्र निमित्तमात्रं तस्यैव विजये यूयं महीयध्वं महिमानं प्राप्नुथ। एतदिति क्रियाविशेषणार्थम्। मिथ्याभिमानस्तु युष्माकमयमस्माकमेवायं विजयोऽस्माकमेवायं महिमेति। ततस्तस्मादुमावाक्याद्धैव विदांचकार ब्रह्मेतीन्द्रोऽवधारणात्ततो हैवेति न स्वातन्त्र्येण॥ [२६] १॥

यस्मादग्निवाय्विन्द्रा एते देवा ब्रह्मणः संवाददर्शनादिना सामीप्यमुपगतास्तस्मादैश्वर्यगुणैरतितरामिव शक्तिगुणादिमहाभाग्यैरन्यान्देवानतितरामतिशयेन शेरत इवैते देवाः। इवशब्दोऽनर्थकोऽवधारणार्थो वा। यदग्निर्वायुरिन्द्रस्ते हि देवा यस्मादेनद्ब्रह्म नेदिष्ठमन्तिकतमं प्रियतमं पस्पृशुः स्पृष्टवन्तो यथोक्तैर्ब्रह्मणः संवादादिप्रकारैस्ते हि यस्माच्च हेतोरेनद्ब्रह्म प्रथमः प्रथमाः प्रधानाः सन्त इत्येतद्विदांचकार विदांचक्रुरित्येतद्ब्रह्मेति॥ [२७] २॥

[वाक्यभाष्यम्]तां च पृष्ट्वा तस्या एव वचनाद्विदांचकार विदितवान्। अत इन्द्रस्य बोधहेतुत्वाद्विद्यैवोमा। "विद्यासहायवानीश्वरः" इति स्मृतिः। यस्मादिन्द्रविज्ञानपूर्वकमग्निवाय्विन्द्रास्ते ह्येनन्नेदिष्ठमतिसमीपं ब्रह्मविद्यया ब्रह्म प्राप्ताः सन्तः पस्पृशुः स्पृष्टवन्तः। ते हि प्रथमः प्रथमं विदांचकार विदांचक्रुरित्येतत्। तस्मादतितरामतीत्यान्यानतिशयेन दीप्यन्तेऽन्यान्देवांस्ततोऽपीन्द्रोऽतितरां दीप्यते। आदौ ब्रह्मविज्ञानात्। [२६]१। [२७]२॥ [२८]३॥

[प्रकाशिका] इन्द्रेण पृष्टा देव्येतद्यक्षं ब्रह्मेति होवाच हेति निश्चयमाह। एतदेतस्य देवेष्वनुप्रविष्टस्य ब्रह्मणो विजये तद्विजयनिमित्तं महीयध्वं महिमवन्तो भवत न त्वात्मनो विजयनिमित्तं गर्विणो भवत वै निश्चितमेतदिति चोवाचेत्यन्वयः। एवमुभयोपदिष्ट इन्द्रः किं चकारेत्यत आह—तत इति। ततो हैव देव्युपदेशादेव तद्यक्षमिन्द्रो ब्रह्मेति दैत्यविजयोऽस्मदनुप्रविष्टब्रह्मकृत इति विदांचकार ज्ञातवान्॥ १॥

तस्माद्वै यस्मात्त्वं ब्रह्मणः पूर्वं दृष्टत्वादेवैते देवा अन्यान्देवानतितरामिवेति। एते देवाः क इत्यतस्तानाह—यदग्निर्वायुरिन्द्र इति। यदग्निर्योऽ-

**विदांचकार ब्रह्मेति ॥ [ २७ ] २ ॥ तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान्स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत्प्रथमो विदांचकार ब्रह्मेति ॥ [ २८ ] ३ ॥ तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा३ इतीन्-**

[पदभाष्यम्] यस्मादग्निवायू अपीन्द्रवाक्यादेव विदांचक्रतुरिन्द्रेण ह्युमावाक्यात्प्रथमं श्रुतं ब्रह्मेत्यतस्तस्माद्वा इन्द्रोऽतितरामतिशयेन शेत इवान्यान्देवान्स ह्येनन्नेदिष्ठं पस्पर्श यस्मात्स ह्येनत्प्रथमो विदांचकार ब्रह्मेत्युक्तार्थं वाक्यम् ॥ [२८] ३ ॥

तस्य प्रकृतस्य ब्रह्मण एष आदेश उपमोपदेशो निरुपमस्य ब्रह्मणो येनोपमानेनोपदेशः सोऽयमादेश इत्युच्यते । किं तद्यदेतत्प्रसिद्धं लोके विद्युतो व्यद्युतद्विद्योतनं कृतवदित्येतदनुपपन्नमिति । विद्युतो विद्योतनमिति कल्प्यते । आ इत्युपमार्थे । विद्युतो विद्योतनमिवेत्यर्थः । "यथा सकृद्विद्युतम्" बृ. २।३।६ इति श्रुत्यन्तरे च दर्शनाद्विद्युदिव हि सकृदात्मानं दर्शयित्वा तिरोभूतं ब्रह्म देवेभ्यः । अथवा विद्युतस्तेज इत्यध्याहार्यम् । व्यद्युतद्विद्योतितवत्, आ इव । विद्युतस्तेजः सकृद्विद्योतितवदिवेत्याभिप्रायः । इतिशब्द आदेशप्रतिनिर्देशार्थ इत्ययमादेश इति । इच्छब्दः समुच्चयार्थः । अयं चापरस्तस्यादेशः । कोऽसौ । न्यमीमिषत् । यथा चक्षुर्न्यमीमिषन्निमेषं कृतवत् । स्वार्थे णिच् । उपमार्थ एवाकारः । चक्षुषो

[वाक्यभाष्यम्]तस्यैष आदेशस्तस्य ब्रह्मण एष वक्ष्यमाण आदेश उपासनोप-

[प्रकाशिका] ग्निर्यो वायुर्य इन्द्र एते देवाः । कुत एतेऽधिका इत्यतस्तस्मादित्युक्तम् । हेतुं व्यनक्ति—ते हीति । हि यस्मादेतद्यक्षरूपं ब्रह्म नेदिष्ठं समीपस्थं पस्पृशुः । स्पृश संस्पर्शने । परामर्शं कृतवन्त इत्यर्थः । परामर्शात्प्रागग्निवाय्वोर्यक्षदर्शनमात्रमिन्द्रस्य तु यक्षस्य ब्रह्मत्वज्ञानमिति बोध्यम् । तद्व्यनक्ति—ते हीति । तेऽग्निवाय्विन्द्राः । प्रथमः प्रथमं विदांचकार विदांचक्रुः ॥२॥

ब्रह्मवेदनं चेन्द्रस्य देव्युपदेशादन्यस्य त्विन्द्रोपदेशादिति भावेनेन्द्रस्य ज्ञानोदयप्रकारमाह । तस्मादित्युक्तं हेतुं व्यनक्ति स ह्येनादिति । एतदेव । तद्वाक्यार्थमेव व्यक्तमाह । स ह्येनत्प्रथम इति प्रथममित्यर्थः ॥ ३ ॥

अधिदैवतमध्यात्मं चोपास्यरूपमुपदिशति—तस्यैष इत्यादिना । तस्य

न्यमीमिषदा ३ इत्यधिदैवतम् ॥ [ २९ ] ४ ॥

अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्म-

[पदभाष्यम्] विषयं प्रति प्रकाशतिरोभाव इव चेत्यर्थः । इत्यधिदैवतं देवता-विषयं ब्रह्मण उपमानदर्शनम् ॥ [२९] ४ ॥

अथानन्तरमध्यात्मं प्रत्यगात्मविषय आदेश उच्यते । यदेतद्गच्छतीव च मन एतद्ब्रह्म ढौकत इव विषयी करोतीव यथानेन मनसैतद्ब्रह्मोपस्मरति समीपतः स्मरति साधकोऽभीक्ष्णं भृशं संकल्पश्च मनसो ब्रह्मविषयो मन-उपाधिकत्वाद्धि मनसः संकल्पस्मृत्यादिप्रत्ययैरभिव्यज्यते ब्रह्मविषयी क्रियमाण इव चातः स एष ब्रह्मणोऽध्यात्ममादेशो विद्युन्निमे-

[वाक्यभाष्यम्] देश इत्यर्थः । यस्माद्देवेभ्यो विद्युदिव सहसैव प्रादुर्भूतं ब्रह्म द्युतिमत्तस्माद्विद्युतो विद्योतनं यथा यदेतद्ब्रह्म व्यद्युतद्विद्योतितवत् । आ इवेत्युपमार्थ आशब्दः । यथा घनान्धकारं विदार्य विद्युत्सर्वतः प्रकाशत एवं तद्ब्रह्म देवानां पुरतः सर्वतः प्रकाशवव्यक्तीभूतमतो व्यद्युतदिवेत्युपास्यम् । " यथा सकृद्विद्युतम्" बृ. ३।२।६ इति च वाजसनेयके । यस्माच्चेन्द्रोप-सर्पणकाले न्यमीमिषत् । यथा कश्चिच्चक्षुर्निमेषणं कृतवानिति । इतीदित्य-नर्थकौ निपातौ । निमिषितवदिव तिरोभूतमित्येवमधिदैवतं देवताया अधि यद्दर्शनमधिदैवतं तत् ॥ [२९] ४ ॥

अथानन्तरमध्यात्ममात्मनोऽध्यात्ममुच्यत इति वाक्यशेषः । यदेतद्यथो-क्तलक्षणं ब्रह्म गच्छतीव प्राप्नोतीव विषयी करोतीवेत्यर्थः । न पुनर्विषयी

[प्रकाशिका] ब्रह्मण एष आदेश उपदेशः । यदेतत्कपिलाख्यं रूपम् । विद्युतो बहुवचनमाद्यर्थे उपलक्षणं वा विद्युदादींस्तेजोरूपानर्थाना समन्ताद्व्यद्युत-द्व्यद्योतयददीपयादिति । आ न्यमीमिषत्सम्यङ्न्यमीमिषत्सम्यङ्न्यमीलयत् । आ पूर्णमित्यर्थः । यद्वा यस्माद्देवेभ्यो विद्युदिव सहसैव प्रादुर्भूतं ब्रह्म द्युति-मत्तस्माद्विद्युतो विद्योतनं यथा यदेतद्ब्रह्म व्यद्युतद्विद्योतितवत् । आ इवेत्युपमार्थे आशब्दः । यथा घनान्धकारं विदार्य विद्युत्सर्वतः प्रकाशत एवं तद्ब्रह्म देवानां पुरतः सर्वतः प्रकाशवद्व्यक्तीभूतमतो विद्युतदिवेत्युपास्यम् । " यथा सकृद्विद्युतम् " २।३।६ इति बृहदारण्यके । यस्माच्चेन्द्रोपसर्पणकाले न्यमी-मिषत् । यथा कश्चिच्चक्षुर्निमेषणं कृतवानिति । इतीदित्यनर्थकौ निपातौ निमिषितवदिव तिरोभूतमित्येवमधिदैवतं देवताया अधि यद्दर्शनमधिदैवतं तत् ॥ ४ ॥

रत्यभीक्ष्णं संकल्पः ॥ [ ३० ] ५ ॥

तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं

[पदभाष्यम्] षणवदधिदैवतं द्रुतं प्रकाशनधर्म्यध्यात्मं च मनः प्रत्ययसमकालाभिव्यक्तधर्मीत्येष आदेशः । एवमादिश्यमानं हि ब्रह्म मन्दबुद्धिगम्यं भवतीति ब्रह्मण आदेशोपदेशः । नहि निरुपाधिकमेव ब्रह्म मन्दबुद्धिभिराकलयितुं शक्यम् ॥ [३०] ९ ॥

किंच तद्ब्रह्म ह किल तद्वनं नाम तस्य वनं तद्वनं तस्य प्राणिजातस्य प्रत्यगात्मभूतत्वाद्वननीयं संभजनीयमतस्तद्वनं नाम प्रख्यातं ब्रह्म तद्वनमिति यतस्तस्मात्तद्वनमित्यनेनैव गुणाभिधानेनोपासितव्यं चिन्तनीयमिति । अनेन नाम्नोपासकस्य फलमाह—स यः कश्चिदेतद्यथोक्तं ब्रह्मैवं

[वाक्यभाष्यम्] करोति मनसोऽविषयत्वाद्ब्रह्मणोऽतो मनो न गच्छति । येनाहुर्मनो मतमिति हि चोक्तम् । गच्छतीवेति तु मनसोऽपि मनस्त्वादात्मभूतत्वाच्च ब्रह्मणस्तत्समीपे मनो वर्तत इत्युपस्मरत्यनेन मनसैव तद्ब्रह्म विद्वान्यस्मात्तस्माद्ब्रह्म गच्छतीवेत्युच्यते । अभीक्ष्णं पुनः पुनश्च । संकल्पो ब्रह्मप्रेषितस्य मनसः । अत उपस्मरणसंकल्पादिभिर्लिङ्गैर्ब्रह्म मनोऽध्यात्मभूतमुपास्यमित्यभिप्रायः [ ३० ] ९ ॥

तस्य चाध्यात्ममुपासने गुणो विधीयते तद्ध तद्वनं तदेतद्ब्रह्म तच्च तद्वनं च तत्परोक्षं वनं संभजनीयम् । वनतेस्तत्कर्मणस्तस्मात्तद्वनं नाम । ब्रह्मणो गौणं हीदं नाम । तस्मादनेन गुणेन तद्वनमित्युपासितव्यम् । स यः कश्चिदेतद्यथोक्तमेवं यथोक्तेन गुणेन वनमित्यनेन नाम्नाभिधेयं ब्रह्म वेदोपास्ते ।

[प्रकाशिका] अथेत्यर्थान्तरे । अध्यात्मं देहे तस्योपदेश उच्यत इत्यर्थः । यदेतन्मनोऽनेनैव प्रेरितं सद्गच्छतीव च सम्यङ् गच्छतीयत्तया वस्तु न विषयी करोति । अनेनैव ब्रह्मणाऽनिरुद्धाख्येन हरिणानुगृहीतस्तद्विषयजातमुपस्मरति कीदृशं मन इत्यत उक्तमभीक्ष्णं संकल्प इति । भृशमनेकार्थान्संकल्पयतीति । संकल्पमित्यर्थः । लिङ्गव्यत्ययश्छान्दसः । शब्दस्वभावाद्वा अभीक्ष्णं नित्यं भृशं संकल्पश्च भवति । तस्य ब्रह्मणोऽनिरुद्धाख्यस्य हरेरेष उपदेश इत्यर्थः ॥ ९ ॥

तस्योपास्यमन्वर्थं नामाह । तद्धेति । तद्ब्रह्म तद्वनं नाम ततत्वाद्व्या-

वेदाभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ॥[ ३१ ] ६॥
उपनिषदं भो ब्रूहीत्युक्ता त उपनिषद्ब्राह्मीं

[पदभाष्यम्] यथोक्तगुणं वेदोपास्तेऽभि हैनमुपासकं सर्वाणि भूतान्यभिसंवाञ्छन्ति ह प्रार्थयन्त एव यथा ब्रह्म। एवमनुशिष्टः शिष्य आचार्यमुवाच ॥ [ ३१ ] ६ ॥

उपनिषदं रहस्यं यच्चिन्त्यं भो भगवन्ब्रूहीत्येवमुक्तवति शिष्य आहाचार्यः। उक्ताभिहिता ते तवोपनिषत्। का पुनः सेत्याह—ब्राह्मीं ब्रह्मणः परमात्मन इयं तां परमात्मविषयत्वादतीतविज्ञानस्य वावैव त उपनिषदमब्रूमेत्युक्तामेव परमात्मविद्यामुपनिषदमब्रूमेत्यवधारयत्युत्तरार्थम्। परमात्मविषयामुपनिषदं श्रुतवत उपनिषदं भो ब्रूहीति पृच्छतः शिष्यस्य कोऽभिप्रायः। यदि तावच्छ्रुतस्यार्थस्य प्रश्नः कृतस्ततः पिष्टपेषणवत्पुनरुक्तोऽनर्थकः प्रश्नः स्यादथ सावशेषोक्तोपनिषत्स्यात्ततस्तस्याः फलवचनेनोपसंहारो न युक्तः प्रेत्यास्माल्लोकादमृता भवन्तीति। तस्मादुक्तोपनिषच्छेषविषयोऽपि प्रश्नोऽनुपपन्न एवानवशेषितत्वात्। कस्तर्ह्यभिप्रायः प्रष्टुरित्युच्यते। किं पूर्वोक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तरापेक्षा। अथ निरपेक्षैव। सापेक्षा चेदपेक्षितविषयामुपनिषदं ब्रूहि। अथ निरपेक्षा चेदवधारय पिप्पलादवन्नातः परमस्तीत्येवमभिप्रायः। एतदुपपन्नमाचार्यस्यावधारणवचनमुक्ता त उपनिषदिति। ननु नावधारणमिदं यतोऽन्यद्वक्त-

[वाक्यभाष्यम्] तस्यैतत्फलमुच्यते। सर्वाणि भूतान्येनमुपासकमभिसंवाञ्छन्तीहाभिसंभजन्ते सेवन्ते स्मेत्यर्थः। यथागुणोपासनं हि फलम् ॥ [ ३१ ] ६ ॥

उपनिषदं भो ब्रूहीत्युक्तायामप्युपनिषदि शिष्येणोक्त आचार्य आह। उक्ता कथिता ते तुभ्यमुपनिषदात्मोपासनं च। अधुना ब्राह्मीं वाव ते तुभ्यं ब्रह्मणो ब्राह्मणजातेरुपनिषदमब्रूम वक्ष्याम इत्यर्थः। वक्ष्यति हि।

[काशिका] सत्वाद्वननीयत्वाद्भजनीयत्वात्। तद्वनमिति कल्याणनिमित्तकमवत्। तनोतेस्त्यजियजितनिभ्य इत्यद्प्रत्ययः। वनतेरकारः। तच्च तद्वनं चेति तद्वनमिति। हेति प्रसिद्धम्। तद्वनमित्युपासकस्य फलमाह—स य इति। स प्रसिद्धो योऽधिकार्येतद्ब्रह्मैवं तद्वनं नामेत्येवं रूपेण वेदैनं तद्वनत्वज्ञानिनं सर्वाणि भूतान्यभि संवाञ्छन्ति। सर्वापेक्षितो भवतीत्यर्थः ॥ ६ ॥

एवं श्रुत्वा पुनराचार्यं पृच्छति शिष्य उपनिषदं भो ब्रूहीति। भो

**वाव त उपनिषदमब्रूमेति ॥ [ ३२ ] ७ ॥**

[पदभाष्यम्] व्यमित्याह तस्यै तपो दम इत्यादि सत्यं वक्तव्यमुच्यत आचार्येण न तूक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तराभिप्रायेण वा । किंतु ब्रह्मविद्याप्राप्त्युपायाभिप्रायेण । वेदैस्तदङ्गैश्च सह पाठेन समीकरणात्तपःप्रभृतीनाम् । न हि वेदानां शिक्षाद्यङ्गानां च साक्षाद्ब्रह्मविद्याशेषत्वं तत्सहकारिसाधनत्वं वा । सहपठितानामपि यथायोग्यं विभज्य विनियोगः स्यादिति चेद्यथा सूक्तवाकानुमन्त्रणमन्त्राणां यथादैवतं विभागस्तथा तपोदमकर्मसत्यादीनां ब्रह्मविद्याशेषत्वं तत्सहकारिसाधनत्वं वेति कल्प्यते । वेदानां तदङ्गानां चार्थप्रकाशकत्वेन कर्मात्मज्ञानोपायत्वमित्येवं ह्ययं विभागो युज्यतेऽर्थसंबन्धोपपत्तिसामर्थ्यादिति चेत् । नायुक्तेः । न ह्ययं विभागो घटनां प्राञ्चति । न हि सर्वक्रियाकारकफलभेदबुद्धितिरस्कारिण्या ब्रह्मविद्यायाः शेषापेक्षा सहकारिसाधनसंबन्धो वा युज्यते । सर्वविषयव्यावृत्तप्रत्यगात्मविषयनिष्ठत्वाच्च ब्रह्मविद्यायास्तत्फलस्य च निःश्रेयसस्य,

“ मोक्षमिच्छन्सदा कर्म त्यजेदेव ससाधनम् ।
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ” ॥

तस्मात्कर्मणां सहकारित्वं कर्मशेषापेक्षा वा न ज्ञानस्योपपद्यते । ततोऽसदेव सूक्तवाकानुमन्त्रणवद्यथायोगं विभाग इति । तस्मादवधारणार्थैव प्रश्नप्रतिवचनस्योपपद्यते । एतावत्येवेयमुपनिषदुक्तान्यनिरपेक्षामृतत्वाय। [३२]७।

यामिमां ब्राह्मीमुपनिषदं तवाग्रेऽब्रूमेति तस्यै तस्या उक्ताया उपनिषदः प्राप्त्युपायभूतानि तपआदीनि । तपः कायेन्द्रियमनसां समाधानम् । दम

[वाक्यभाष्यम्] ब्राह्मी नोक्ता । उक्ता त्वात्मोपनिषत् । तस्मान्न भूताभिप्रायोऽब्रूमेत्ययं शब्दः ॥ [ ३२ ] ७ ॥

तस्या वक्ष्यमाणाया उपनिषदस्तपो ब्रह्मचर्यादि दम उपशमः कर्माग्निहोत्रादीत्येतानि प्रतिष्ठाश्रयः । एतेषु हि सत्सु ब्राह्मोपनिषत्प्रतिष्ठिता भवति वेदाश्चत्वारोऽङ्गानि च सर्वाणि । प्रतिष्ठेत्यनुवर्तते । ब्रह्माश्रया हि विद्या

[प्रकाशिका] आचार्योपनिषदं सप्रतिष्ठां सायतनां ब्रूहीत्यपृच्छदिति शेषः किमुपनिषत्प्रतिपाद्यं पृच्छस्युतोपनिषदुत्पन्नविद्याया अवस्थानकारणं किं वा विद्यायाः कारणमिति हृदि विकल्प्य क्रमेणोत्तरमाह–उक्ता त इति । ते तुभ्यं ब्राह्मीं ब्रह्मविषयां वावेत्यसंशयं त उपनिषत्स्वरूपमब्रूमावोचामेति । ब्रह्मे

१ ब्राह्मोपनिषदित्यस्य स्थाने ब्राह्मोपनिषदिति पाठः ।

**तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गाणि सत्यमायतनम् ॥ [ ३३ ] ८ ॥**

[पदभाष्यम्] उपशमः । कर्माग्निहोत्रादि । एतैर्हि संस्कृतस्य सत्त्वशुद्धिद्वारा तत्त्वज्ञानोत्पत्तिर्दृष्टा ह्यमृदितकल्मषस्योक्तेऽपि ब्रह्मण्यप्रतिपत्तिर्विपरीतप्रतिपत्तिश्च यथेन्द्रविरोचनप्रभृतीनाम् । तस्मादिह वातीतेषु वा बहुषु जन्मान्तरेषु तपआदिभिः कृतसत्त्वशुद्धेर्ज्ञानं समुत्पद्यते यथाश्रुतम् ।

" यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः " ॥ श्वे. ६।२३

इतिमन्त्रवर्णात् । " ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः " इति स्मृतेः । इतिशब्द उपलक्षणप्रदर्शनार्थः । इत्येवमाद्यन्यदपि ज्ञानोत्पत्तेरुपकारकममानित्वमदम्भित्वमित्याद्युपदर्शितं भवति । प्रतिष्ठा पादौ पादाविवास्यास्तेषु हि सत्सु प्रतितिष्ठति ब्रह्मविद्या प्रवर्तते पद्भ्यामिव पुरुषः । वेदाश्चत्वारः सर्वाणि चाङ्गानि शिक्षादीनि षट्कर्मज्ञानप्रकाशत्वाद्वेदानां तद्रक्षणार्थत्वादङ्गानां प्रतिष्ठात्वम् । अथवा प्रतिष्ठाशब्दस्य पादरूपकल्पनार्थत्वाद्वेदास्त्वितराणि सर्वाङ्गाणि शिरआदीनि । अस्मिन्पक्षे शिक्षादीनां वेदग्रहणेनैव ग्रहणं कृतं प्रत्येतव्यम् । अङ्गिनि गृहीतेऽङ्गानि गृहीतान्येव भवन्ति । तदायतनत्वादङ्गानाम् । सत्यमायतनं यत्र तिष्ठत्युपनिषत्तदायतनं सत्यमिति । अमायिताकौटिल्यं वाङ्मनःकायानां तेषु ह्याश्रयति विद्या येऽमायाविनः साधवः । नासुरप्रकृतिषु मायाविषु । " न येषु जिह्ममनृतं न माया च " प्र १।१६ इति श्रुतेः । तस्मात्सत्यमायतनमिति कल्प्यते । तपआदिष्वेव प्रतिष्ठात्वेन प्राप्तस्य सत्यस्य पुनरायतनत्वेन ग्रहणं साधनातिशयत्वज्ञापनार्थम् ।

" अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राच्च सत्यमेकं विशिष्यते " इति स्मृतेः ॥३३॥८॥

यो वा एतां ब्रह्मविद्यां केनेषितमित्यादिना यथोक्तामेवं महाभागां ब्रह्म ह देवेभ्य इत्यादिस्तुतां सर्वविद्याप्रतिष्ठां वेदामृतत्वं हि विन्दत इत्युक्तमपि

[वाक्यभाष्यम्] सत्यं यथाभूतवचनमपीडाकरमायतनं निवासः । सत्यवत्सु हि सर्वं यथोक्तमायतन इवावस्थितम् ॥ [ ३३ ] ८ ॥

[प्रकाशिका] होवाचेत्यादिना ब्रह्मस्वरूपोक्तेस्तत्र वक्तव्यं किमपि नेत्यर्थः ॥७॥

तस्यै तस्या विद्यायास्तपो दमः कर्म च प्रतिष्ठा । तपः कृच्छ्रचान्द्रा-

**यो वा एतामेवं वेदापहत्य पाप्मानमन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ [ ३४ ] ९ ॥**

**इति चतुर्थः खण्डः ॥ ४ ॥**

[पदभाष्यम्] ब्रह्मविद्याफलमन्ते निगमयते—अपहत्य पाप्मानमविद्याकाम-कर्मलक्षणं संसारबीजं विधूयानन्तेऽपर्यन्ते । स्वर्गे लोके सुखात्मके ब्रह्मणी-त्येतत् । अनन्त इति विशेषणान्न त्रिविष्टपे । अनन्तशब्द औपचारिकोऽपि स्यादित्यत आह—ज्येय इति । ज्येये ज्यायसि सर्वमहत्तरे स्वात्मनि मुख्य एव प्रतितिष्ठति । न पुनः संसारमापद्यत इत्यभिप्रायः ॥ [ ३४ ] ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवत्पादकृतौ केनोपनिषत्पदभाष्ये चतुर्थः खण्डः ॥ ४ ॥

समाप्तमिदं श्रीमच्छंकराचार्यविरचितं तलवकारोपनिषदपर-पर्यायकेनोपनिषत्पदभाष्यम् ।

[वाक्यभाष्यम्] तामेतां तपआद्यङ्गां तत्प्रतिष्ठां ब्राह्मीमुपनिषदं सायतनामा[1]-त्मज्ञानहेतुभूतामेवं यथावद्यो वेदानुवर्ततेऽनुतिष्ठति । तस्यैतत्फलमाह—अपहत्य पाप्मानम् । अपक्षय्य धर्माधर्मावित्यर्थः । अनन्तेऽपारेऽविद्यमानान्ते । स्वर्गे लोके सुखप्राये निर्दुःखात्मनि परे ब्रह्मणि । ज्येये महति सर्वमहत्तरे प्रतितिष्ठति सर्ववेदान्तवेद्यं ब्रह्मात्मत्वेनावगम्य तदेव ब्रह्म प्रतिपद्यत इत्यर्थः ॥ [ ३४ ] ९ ॥ इति चतुर्थः खण्डः ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पादपूज्यशिष्य-श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवतः कृतौ तलवकारोपनिषदपरपर्यायकेनोपनिषद्भाष्ये क्षुद्र-गणवाक्यविवरणं समाप्तम् ।

[प्रकाशिका] यणादि शास्त्रपर्यालोचनं वा । दम इन्द्रियनिग्रहः । कर्म तु वर्णा-श्रमोचितक्रियानुष्ठानम् । प्रतिष्ठा प्रतिष्ठाहेतुः । तपआदिमत्सु विद्या प्रतितिष्ठ-तीत्यर्थः । वेदा ऋगादयस्तदनुकूलग्रन्थाश्च । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षडङ्गरूपसर्वाङ्गाणि सत्यं यथाभूतमपीडाकरं वचन-

---

१ सायतनामित्यस्य स्थाने सत्यायतनामिति पाठः ।

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥
ॐ शान्तिः । शान्तिः । शान्तिः ।
आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बल-
मिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माहं
ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणम-
स्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु
धर्मास्ते मयि सन्तु ते मयि सन्तु ॥
ॐ शान्तिः । शान्तिः । शान्तिः ।
इति सामवेदीयतलवकारोपनिषत्समाप्ता ।

[ प्रकाशिका ] मायतनमुत्पत्तिस्थानं ब्रह्ममीमांसा तस्या इत्यनुषङ्गः। विद्याया इत्यर्थः ॥८॥

एतदुपनिषज्ज्ञानिनः फलमाह——य इति । योऽधिकार्येतामुपनिषदं वेद स पाप्मानमपहत्यानन्ते त्रिविधपरिच्छेदरहिते स्वर्गे सुखरूपे लोके प्रकाशरूपे ज्येये श्रेष्ठे ब्रह्मणीति योज्यम् । प्रतितिष्ठतीतिद्विरुक्तिरुक्तसर्वावधारणार्था ॥९॥

इति चतुर्थः खण्डः ॥ ४ ॥

इति श्रीरङ्गरामानुजविरचितप्रकाशिकासमेता तलवकारोपनिषत् ।

श्रीः

# अथ केनोपनिषद्व्याख्यात्रये बालबोधिनी ।

नत्वा श्रीशंकरं केनभाष्ययोः पदवाक्ययोः ।
वृत्तिः प्रकाशिकायां च तन्यते बालबोधिनी ॥ १ ॥

अथ प्रथमखण्डे प्रथममन्त्रः ॥१॥१॥

[ पदभाष्यम् ] [पृ.१] " चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेद एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वेदः" म. भा. १ । १ । १ इति पातञ्जले महाभाष्ये पस्पशान्हिक उक्तत्वात्सहस्रशाखायुतस्य सामवेदस्यान्यतम्यां तलवकारशाखायामुक्तायोपनिषत्तां व्याख्यातुं तस्या व्याख्येयत्वं प्रतिपादयत्याचार्यः **केनेषितमित्यादिना** । पूर्वेषामष्टानामध्यायानामस्य नवमाध्यायस्य च हेतुहेतुमद्भावः संगतिरिति दर्शयितुं पूर्वं वृत्तमनुवदति–**प्रागेतस्मादित्यादिना**। **कर्माङ्गसामविषयाणि चेति** । पञ्चावयवकं सप्तावयवकं च कर्माङ्गसाम । तद्विषयोपासनानि पृथिव्यादिदृष्टचोक्तानि । कर्माङ्गसामविषये पृथिव्यादिदृष्टिः कर्तव्या । कर्माङ्गसाम पृथिव्यादिरूपभस्तीति मन्तव्यमित्यर्थः । तथा गायत्रसामविषये प्राणदृष्टिः कर्तव्येत्यपि कथितम् । **वंशानन्तमिति** । गुरुशिष्यपरम्पराया अविच्छेदो वंशः । **कार्यमिति**। अवश्यकर्तव्यं नित्यमिति यावत्। **सत्त्वशुद्ध्यर्थमिति**।सत्त्वशुद्धिश्चित्तशुद्धिस्तद्द्वारा नित्यकर्माणि ज्ञानोपयोगीनि। काम्यकर्माणि न कर्तव्यानीति तत्र दोषं दर्शयति–**सकामस्येति**। श्रौतानि–अग्नित्रयसाध्यानि । स्मार्तानि–गृह्याग्निसाध्यानि । " धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्" भ. गी.८।२५ इत्यनेन भगवता दक्षिणमार्गो दर्शितः । पुनरावृत्तिः–पुनर्जन्म । पूर्ववत्प्रतिषिद्धेषु " न कलञ्जं भक्षयेत् " "ब्राह्मणो न हन्तव्यः " इत्यादिषु दोषं दर्शयति–**स्वाभाविक्येति**। प्रतिषिद्धकर्मसु स्वाभाविक्येति प्रवृत्तिर्न तत्र प्रेरकापेक्षेत्यर्थः । **अधोगतिरिति** । पशुप्रभृति वृक्षपाषाणादिपर्यन्तं निकृष्टं जन्मेत्यर्थः । **एतयोः पथोरिति** । एतयोर्ज्ञानकर्मणोरन्यतरेण मार्गेणाप्रवर्तमानाः प्रति-

षिद्धकारिणः पुरुषाः क्षुद्राणि जन्मानि यूकामशकादीनि वारंवारमावर्तमानानि पुनः पुनराप्नुवन्ति । **जायस्व म्रियस्वेति** । " क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः " पा. सू. ३।४।२ इति पाणिनिसूत्रेण लोट् स्वादेशश्च । पुनः पुनर्जायन्ते म्रियन्ते च । असकृज्जननमरणवन्त इत्यर्थः [ **पृ. २** ] **तिस्र इति** । मनुष्यादयो जरायुजाः । पक्ष्यादयोऽण्डजाः । भूमिमुद्भिद्य जायमाना उद्भिज्जा वृक्षादय इति त्रिविधाः प्रजाः । **अत्यायमिति** । आयो गतिः । अतीत्य दक्षिणोत्तरमार्गमुल्लंघ्य या गतिः पश्वादिजन्म तामीयुः प्राप्तवन्त इत्यर्थः । एवं कर्मफलं विचार्य ततो विरक्तस्यात्मज्ञानेऽधिकार इत्याह–**विशुद्धसत्त्वस्येति** । **साध्यसाधनसम्बन्धादिति** । व्यवहितेन विरक्तस्येत्यनेन संबन्धः । साध्यं–स्वर्गादि । साधनं–यज्ञादि । **इहकृतादिति** । एतज्जन्मपूर्वजन्मसाध्यादित्यर्थः । **संस्कारविशेषोद्भवादिति** । ब्रह्मस्मृतिप्रापकः संस्कार एव विशिष्टसंस्कारः । घटपटादिस्मृतिप्रापकास्तु सामान्यसंस्काराः । **जिज्ञासेति** । विचार इत्यर्थः । वस्तु—ब्रह्मरूपम् । **प्रश्नप्रतिवचनलक्षणयेति** । दुर्गमोऽर्थः प्रश्नोत्तराभ्यां ज्ञातुं सुकरो भवतीति श्रुत्या प्रश्नोत्तररूपत्वं स्वीकृतम् । यथा पुरुषसूक्ते "मुखं किमस्यासीत्किं बाहू किमूरू पादावुच्येते । ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः य०मा०सं०३१।१०-११इत्यादौ प्रश्नप्रतिवचने । **पराञ्चीति** । खानि श्रोत्रादीन्द्रियाणि पराग्गमनस्वभावान्येव कृतवान् स्वयंभूः । एतादृशस्वभावकरणमेव तद्धिंसनम् । यतस्तादृशस्वभावादात्मप्राप्तिर्न भवति । तस्मादुपलब्धा परागनात्मभूताञ् शब्दादीनुपलभते नान्तरात्मानम् । एवं स्थितेऽपि कश्चिन्नदीरयप्रतीपगामी पुरुष इव धीरो विवेक्यावृत्तचक्षुरशेषविषयजाताद्व्यावृत्तं चक्षुर्यस्य । चक्षुष उपलक्षणत्वात्सर्वाणीन्द्रियाणि । स चामृतत्वप्राप्तिकामः प्रत्यगात्मानमैक्षत्पश्यतीत्यर्थः । **परीक्षेति** । परीक्ष्य–विचार्य । कर्मचितान्—क्रियासंपादितान्स्वर्गादिलोकान् । अकृतः–मोक्षः । कृतेन--कर्मणा । श्रोत्रियं–शास्त्रसंपन्नम् । ब्रह्मनिष्ठं–आत्मानुभववन्तम् । अत्रेदं ध्येयम् । श्रेष्ठमध्यमकनिष्ठेति भेदेन त्रिविधो गुरुः । तत्र शास्त्राध्ययनसंपन्नो ब्रह्मानुभववांश्च श्रेष्ठः । यतः स शिष्याञ् शास्त्रयुक्त्यादि प्रदर्श्यानुभवबलेन ब्रह्मात्मनोरैक्यं बोधयेत् । केवलशास्त्रनिष्ठो मध्यमः । अयं यद्यप्यनुभवविधुरस्तथापि शिष्यगतासंभावनान्यथासंभावनारूपदोषं शास्त्रयुक्तिभिर्निराकुर्यात्तेनाधिकारी शिष्यः स्वयमेव ब्रह्मानुभवमधिगच्छेत् ।

शास्त्रविधुरोऽपि प्रारब्धकर्मपरिपाकवशात्पूर्वजन्मसंस्कारेण च जीवब्रह्मैक्यानुभववांस्ततोऽवरः। यतोऽयं स्वयंमुक्तोऽपि वर्तमानजन्मस्थशास्त्रज्ञानाभावेन शिष्यगतासंभावनाविपरीतभावनादोषनिराकरणेऽसमर्थत्वाच्छिष्योपदेशेऽकिंचित्करः । इति। विरक्तस्य ब्रह्मज्ञानं नान्यस्येत्यन्वयव्यतिरेकाभ्यां दर्शयति। **एवमित्यादिना**। अन्यथा–वैराग्याभावे बहिर्विषयाक्षिप्तचेतस्त्वे च। **भिद्यन्त इति** । हृदयग्रन्थिः—बुद्ध्याश्रयः कामः । कर्माणि–संचितक्रियमाणानि न तु प्रारब्धं तस्य भोगेनैव क्षयात्। परावरे–परं कारणात्मना। अवरं कार्यात्मनेति कार्यकारणरूपे ब्रह्मणि [ पृ.३ ] ज्ञानकर्मसमुच्चयोऽपि मोक्षसाधक इत्याशङ्क्य खण्डयति–**कर्मसहितादपीत्यादिना** । " स्वाध्यायोऽध्येतव्यः " इति शतपथब्राह्मणोक्तेनैकेनैव विधिना कर्मकाण्डज्ञानकाण्डगतवेदाध्ययने प्रवृत्तिरत उभयकाण्डफलैक्यमावश्यकमिति शङ्काकृदाशयः। केवलमध्ययनविधिपरिग्रहेण फलैक्यं न संभवति यतः श्रुत्या ज्ञानस्य पृथक्फलं स्वयं कण्ठरवेणोक्तमिति प्रतिवक्तुराशयः । यदि कर्मसहितमेव ज्ञानं फलदमिति श्रुतेरभिप्रायोऽभविष्यत्तर्हि तत्र कर्मसंन्यासविधानं नोपापत्स्यदित्याह—**तत्रैवेति**। **किं करिष्याम इति**। तद्विषयकामनाराहित्यान्न प्रजादीनामुपयोग इत्यर्थः । **संन्यास एवेति** । द्विविधः संन्यासः । विविदिषासंन्यासो विद्वत्संन्यासश्च । तत्राद्यो ब्रह्मज्ञानस्यानुभवावसानतासिद्धये परोक्षनिश्चयपूर्वकः स च कर्तव्यकोटिमाटीकते । द्वितीयस्तु सिद्धे ब्रह्मात्मानुभवे संभवति । तेन स्वभावप्राप्तोऽयं नात्र कर्तव्यता । कर्मज्ञानसमुच्चयासंभवे कारणान्तरमाह–**कर्मसहभावित्वविरोधाच्चेति**। पूर्वोक्तसंग्रहवाक्यं विवृणोति–**न ह्युपात्तेत्यादिना** । कर्मणि यज्ञादिकारकाणि स्वर्गादिफलं चैतद्भेदविज्ञानमपेक्ष्यते । ज्ञाने तु साधनसाध्यादिसर्वभेदाभावः । [ पृ. ४ ] ननु कर्मवद्ब्रह्मज्ञानेऽपि यथाविध्यनुष्ठेयत्वमधिकारिविनियोज्यता चास्ति तेन कथं तत्र सर्वभेदप्रत्ययस्तमय इत्यत आह–**वस्तुप्राधान्ये सतीति**। अपुरुषतन्त्रत्वात्–अनुष्ठातृपारतन्त्र्याभावात्। विधिजन्यप्रयत्नभाव्यो विधिविषय उच्यते ज्ञानं तु न तथेति ज्ञानविधेरसिद्धिरित्यर्थः। **दृष्टादृष्टेभ्य इति**। ऐहिकपारलौकिकविषयेभ्य इत्यर्थः। **आपनेयेति**। प्रापणीया निराकरणीया वा न भवतीत्यर्थः । **साधिष्ठमिति**। साधुतमं फलमित्यर्थः । [ पृ. ९ ] शरणं संसाररक्षकम्। इष गतौ दिवादिः । इष आभीक्ष्ण्ये क्र्यादिः । इष इच्छायां तुदादिः । इति धातुत्रयं तत्राद्ययोरर्थस्यासंभवा-

दत्राग्रहणमित्याह—इषेरिति । मनसः पौनःपुन्यस्य गतेश्चात्रानभिप्रेतत्वान्मनसः प्रेरकविशेषस्य बोद्धुमिष्टत्वाद्गत्याभीक्ष्ण्यार्थकेषधातोरसंभव इत्यर्थः । छान्दस इति " तीषसहलुभरुषरिषः " पा. सू. ७ । २ । ४८ इति सूत्रेण तकाराद्यार्धधातुकस्य विकल्पेनेड्विधानात् " यस्य विभाषा " पा. सू. ७ । २ । १५ इति सूत्रेण यस्य क्वचिद्विभाषयेड् विहितस्ततो निष्ठाया इण्न स्यादित्यर्थकेनेषितमित्यत्र क्तप्रत्ययस्येडागमेन न भवितव्यमत्र तु दृश्यत इडागमस्तस्य गतिरियं छान्दस इति । " व्यत्ययो बहुलम् " पा. सू. ३ । १ । ८५ इति सूत्रेण बाहुलकात्कथमप्यत्रेडित्यर्थः । अत्रेट्प्रयोगे सति गुणेन भवितव्यमित्याद्यानन्दज्ञानकृतटीकायामुक्तं तन्न रुचिरम् । यत इडागमे सत्यपि क्तस्य कित्वात् " क्ङिति च " पा. सू. १ । १ । ५ इति सूत्रेण गुणनिषेधस्य दुर्वारत्वात् । इषितं प्रेषितमिति पदद्वयस्य कृत्यमाह—तत्रेति । प्रेषयितृप्रेषणविशेषविषयेति । " द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते " इति न्यायेन विशेषशब्दस्य प्रेषयितरि प्रेषणे च संबन्धस्तदाह—केनेत्यादिना । इच्छामात्रेणेति । प्रयत्नं विना केवलं संनिधिमात्रेणेत्यर्थः । तदपि न संगच्छत इत्याह—अपि चेति । अर्थाधिक्यमिति । यावदर्थं शब्दप्रयोग इत्यभियुक्तोक्तेः । प्रश्नसामर्थ्यादिति । अन्यथा प्रश्न एव व्यर्थः स्यादित्यर्थः । तदेव प्रश्नसामर्थ्यादिति संग्रहवाक्यं विवृणोति—देहादित्यादिना [ पृ. ६ ] संकल्पयतीति । स्वशिरश्छेदमपि कर्तुं वाञ्छतीत्यर्थः । कार्ये—द्यूतादौ ॥ १ ॥

[वाक्यभाष्यम् ] विकल्पसमुच्चयानुष्ठानादिति । उपासनेन विना केवलकर्मानुष्ठानं विकल्पः । उपासनसहितकर्मानुष्ठानं समुच्चयः । तत्सामर्थ्याद्दक्षिणोत्तराभ्यां मार्गाभ्यां पुनर्जन्मापुनर्जन्म वा भवति दक्षिणमार्गवदुत्तरमार्गोऽपि भगवद्गीतासु " अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् " भ. गी. ८।२४ इत्यादिनोक्तः । इदमत्र ध्येयम् । दक्षिणमार्गगामिनः स्वर्गादिलोके पुण्यफलमुपभुज्य " क्षीणे पुण्ये मृत्युलोकं विशंति " भ. गी. ९।२१ इति भगवदुक्त्यनुसारं पुनर्मानुषलोके जन्म लभन्ते । उत्तरमार्गगास्तु तत्तल्लोकानातिवाहिकपुरुषेण सह गत्वा प्रलयसमये " परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् " इत्युक्त्या हिरण्यगर्भेण साकं परं पदं प्रविशन्ति पुनर्जन्म न लभन्ते । इयमेव क्रममुक्तिः । फलनिरपेक्षेत्यादि । सकामतयानुष्ठितं कर्म संसारप्रापकं निष्काममाचरितं तु तच्चित्तशुद्धिसंपा-

दकम् । ततश्चित्तशुद्ध्यनन्तरमात्मज्ञानप्रतिबन्धिका या संसारासक्तिः सापि तस्याधिकारिणो न भवति । द्वैतस्वरूपसंसारदोषदर्शनात् । ततश्च दोष-दर्शनात्सोऽखिलान्बाह्यान् घटपटादिविषयान्यथाभूतान्न पश्यति किन्त्व-सत्यानवधारयति । ततश्चेदृशपदार्थभासकं संसारबीजभूतमनादि भावरूप-मज्ञानमुच्छेत्तुमिच्छति प्रत्यगात्मविषयजिज्ञासुश्च भवति तादृशाधिकारिणः कृतेऽयमध्यायः । मृत्युपदमिति । मृत्योः स्थानभूतं पुनःपुनर्मृत्युसाधकम् । अथवा मृत्युरिति पदं पर्यायशब्दो यस्येत्यर्थः । " प्रमादं वै मृत्युमहं ब्रवीमि " म. भा. स. सु. इति सनत्सुजातोक्तेः । **अनधिगतत्वादिति** । अहं मनुष्योऽहं स्थूल इत्याद्यनुभवे सार्वत्रिके मनुष्यत्वदेहत्वाद्यतिरिक्ता-त्मनोऽज्ञातत्वादित्यर्थः । यद्यपि " स्वर्गकामोऽग्निष्टोमेन यजेत " इत्यादि-श्रुतिप्रामाण्यान्मनुष्यत्वदेहत्वाद्यतिरिक्त आत्मा स्वर्गफलभुगङ्गीक्रियते कर्मणि तथापि न ब्रह्मात्मतत्त्वं तत्रादर्तुं शक्यते साधनसाध्यादिविरोधा-दित्याह संग्रहवाक्येन—**कर्मविषये चेत्यादिना** । अनुक्तिरात्मनोऽकथन-मित्यर्थः । एतदेव संग्रहवाक्यं विवृणोति—अस्येति । [ पृ. २ ] **कर्मणा विरुध्यत इति** । कर्मज्ञानविरोधविषय आचार्येण बहुषु स्थलेषु बहुशः प्रतिपादितम् । तथाहि तैत्तिरीयोपनिषद्भाष्ये " विरोधाच्च विद्याकर्मणोः समुच्चयानुपपत्तिः । प्रविलीनकर्त्रादिकारकविशेषतत्त्वविषया हि विद्या तद्विपरीतकारकसाध्येन कर्मणा विरुध्यते । न ह्येकं वस्तु परमार्थतः कर्त्रादिविशेषवत्तच्छून्यं चेत्युभयथा द्रष्टुं शक्यते । अवश्यं ह्यन्यतरन्मिथ्या स्यादन्यतरस्य च मिथ्यात्वप्रसंगे युक्तं यत्स्वाभाविकाज्ञानविषयस्य द्वैतस्य मिथ्यात्वम् । "यत्र हि द्वैतमिव भवति" "मृत्योः स मृत्युमाप्नोति" "अथ यत्रान्यत्पश्यति तदल्पम् " अन्योऽसावन्योऽहमस्मि " उदरमन्तरं कुरुते" "अथ तस्य भयं भवति " इत्यादिश्रुतिशतेभ्यः । सत्यत्वं चैकत्वस्य "एक-धैवानुद्रष्टव्यम्" "एकमेवाद्वितीयम्" "ब्रह्मैवेदं सर्वम्" "आत्मैवेदं सर्वम्" इत्यादिश्रुतिभ्यः । न च संप्रदानादिकारकभेदादर्शने कर्मोपपद्यते । अन्यत्व-दर्शनापवादश्च विद्याविषये सहस्रशः श्रूयते । अतो विरोधो विद्याकर्मणोः । अतः समुच्चयानुपपत्तिः ॥" तथा तत्रैवाग्रेऽपि । " अपि चानात्मद-र्शनेऽनात्मविषयः कामः । कामयमानश्च करोति कर्माणि । ततस्तत्फलोप-भोगाय शरीराद्युपादानलक्षणः संसारः । तद्व्यतिरेकेणात्मैकत्वदर्शिनो विष-याभावात्कामानुत्पत्तिरात्मनि चानन्यत्वात्कामानुत्पत्तौ स्वात्मन्यवस्थानं

मोक्ष इत्यतोऽपि विद्याकर्मणोर्विरोधः ॥" इति । **कर्मविषयेऽनुक्तिरिति** यतः कर्म ज्ञानेन विरुध्यतेऽतो ज्ञानप्रतिपादकोपनिषद्भागे कर्मविषयिण्यनुक्ति कर्म नोक्तं किन्तु विज्ञानविषयको विचारः प्रचलित इत्यर्थः । कर्मानारम्भ इतीत्यादि प्रश्नप्रतिवचनात्मकसंग्रहवाक्यं विवृणोति–**यदीत्यादिना परितित्याजयिषितमिति** । पूर्वं कर्म कृत्वा ततस्त्यक्तुमिष्टमित्यर्थः । [ पृ ३ ] **तन्निर्वर्तकाश्रयेत्यादि** । तन्निर्वर्तकः संस्कारसंपादक आश्रयभूतो य प्राणस्तद्विज्ञानं तदुपासनं तत्सहितानि । प्राणोपासनसहितानि कर्माणि निष्कामस्य पुरुषस्य चित्तसंस्कारार्थान्येवेत्यर्थः । **देवयाजी श्रेयानिति** । फलकामनया देवान्यो यजते स श्रेयानुतात्मशुद्ध्यर्थमेव स्वर्गाद्यासंगं हित्वा यो यजते स आत्मयाजी श्रेयानिति प्रश्नं कृत्वात्मयाजी श्रेयानिति निरूपितं शतपथाख्ये शुक्लयजुर्वेदब्राह्मणे कामानुपघातसहितं मे ममाङ्गमनेन कर्मणा संस्क्रियत इति संस्कारार्थत्वेनैव करोति न कामवशग इत्यर्थः । **महायज्ञैरिति** । ब्राह्मी–ब्रह्मज्ञानार्हा । तनुरित्यनेन तनुस्थ आत्मान्तःकरणं लक्ष्यते तास्थ्यात् । मञ्चाः क्रोशन्तीतिवत् । **आत्मज्ञानप्रतिबन्धेत्यादि** । निर्माष्टर्यै- निर्माजनाय निराकरणायेत्यर्थः । **आदर्शनिर्माजनवदिति** । दर्पणनिर्माजनं यथा तत्संस्कारकं नतु प्रतिबिम्बदर्शने तस्य प्रत्यक्षत उपयोगस्तद्वत्कर्माणि चित्तसंस्कारकाणि मलिन-प्रतिबिम्बापहारद्वारात्मज्ञानैकत्वसाधकानि न तु प्रत्यक्षत आत्मज्ञानं कर्मभ्य उत्पद्यते । **निरर्थकत्वादिति** । न केवलं श्रुतिप्रामाण्याज्ज्ञानिना कर्माणि न कर्तव्यानीति । किन्तु "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति कुमारिलभट्टकृतश्लोकवार्तिकवचसा निष्प्रयोजनत्वादपीत्यर्थः । [ पृ. ४ ] **अत्यरेचयदिति** । संन्यास एव विशिष्यत इत्यर्थः । **नहीति** । यथेष्टदेशं प्रति गन्तव्यमिति नाविकेनातरग्रहणपूर्वकमुक्ते न कोऽपि न गच्छत्यपि तु गच्छतीत्यर्थः । **सिषाधयिषतीति** । उत्पत्तिराप्तिर्विकृतिः संस्कृतिश्चेति चतुर्विधा क्रियात्मा तु न तथेत्याह–**स्वभावसिद्धश्चेत्यादिना** । उत्पाद्यः पुरोडाशादिः । विकार्यः सोमादिः । आप्यो मन्त्रादि । संस्कार्यो व्रीह्यादिः । इति क्रमेणोदाहरणानि । विचिकारयिषितः–विकारयितुमिष्टः । संचिकीर्षितः–संस्कर्तुमिष्टः । **अन्येनान्यदिति** । अन्येन–मृदादिचूर्णेन । अन्यद्भाण्डादि । [ पृ. ५ ] **व्यावृत्तबाह्यबुद्धेरिति** । बाह्यविषयाद्विरक्तचेतस इत्यर्थः । **प्रवृत्तिलिङ्गादिति** । शिष्यस्य प्रश्ने प्रवृत्तिराचार्यस्य प्रतिवचने तत्सामर्थ्यादि-

त्यर्थः । यद्यपि सामान्यतश्चेतनावतोऽधिष्ठातृत्वं ज्ञातं तथापि विशेषतोऽज्ञातत्वाच्छिष्यस्य प्रश्ने प्रवृत्तिरिति विवृणोति–**रथादीनामिति** । **करणानीति** । ' अन्यानधीनव्यापारवत्त्वे सति कार्यजनकत्वं करणत्वम् ' इति करणत्वलक्षणादन्यः कोऽप्यधिष्ठाता करणानामवश्यः कल्पनीयः । मनआदीनां करणत्वं च " अन्यत्रमना अभूवं नादर्शम् " इति लौकिकानुभवबलात्स्पष्टम् । प्रदीपवत्तस्याचेतनत्वमपीत्यतोऽधिष्ठातुरवश्यमपेक्षा । प्रेषितमिवेतीवशब्दाध्याहारेण व्याख्याने किं बीजं तदाह–**न त्विति** । **आत्माविविक्तनित्यचित्स्वरूपतयेति** । अविविक्तमपृथग्भूतं नित्याचित्स्वरूपं यस्य तद्भावस्तेन । ' विचिर् पृथग्भावे ' इत्यस्य क्तान्तं रूपं विविक्तमिति । मनो ब्रह्मचैतन्येन नित्यमभिन्नमतो ब्रह्म तस्य मनसो विषयेषु प्रवृत्तौ निमित्तमात्रं भवति । अत्रार्थे दृष्टान्तमाह–**नित्यचिकित्साधिष्ठातृवदिति** । " पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता नीतिः । " इत्युक्त्यनुसारं सर्वदा राजादीनां धनवतां 'कोऽपि मामभ्यवहार्ये विषादिमिश्रणेन घातयिष्यति ' इति भीतिर्भवति ततस्ते स्वसमीपे चकोरादिपक्षिणो नीलादीन्मर्कटजातिविशेषांश्च विषपरीक्षकत्वेन ख्यातान् पालयन्ति । भोजनसमयेऽखिलाभ्यवहार्यपदार्थभाण्डं तत्पुरतः स्थापयन्ति स च चकोरादिर्नीलादिवानरो वा यं पदार्थं भुङ्क्ते तमेव ते भक्षयन्ति नान्यं पदार्थं तेनाभक्षितम् । एवं च चकोरादिः केवलं समीपस्थित्या तत्तत्पदार्थभोजने तदभोजने वा राज्ञः प्रवृत्तौ निमित्तमात्रं न चैवं भुङ्क्ष्व च मा भुङ्क्ष्वेति प्रवर्तयति निषेधति वा तद्वदात्माविविक्तचित्स्वरूपतया निमित्तमात्रम् । शब्दार्थस्त्वेवम् । नित्यं या चिकित्सा व्याधिप्रतिकारः संशयो वा तदर्थमधिष्ठाता समीपस्थितिमांश्चकोरादिस्तद्वत् । कितेर्व्याधिप्रतीकारे निग्रहेऽपनयने नाशने संशये चेति वार्तिकेन सन् । **प्रकरणादिति** । इन्द्रियसंनिधानादित्यर्थः ।
[ पृ. ६ ] संपूर्णश्लोकार्थमाह–**करणानामिति** ॥ १ ॥

[ प्रकाशिका ] [ पृ. ६ ] **धन्य इति** । अधिकारीत्यर्थः । **कारणत्वादिति** । कर्तुरधीनतया क्रियाजनकत्वादित्यर्थः । **प्राण्यङ्गत्वादिति** । " द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् " पा. सू. २।४।२ इति सूत्रेण ॥ १ ॥

अथ प्रथमखण्डे द्वितीयमन्त्रः ॥ १।२ ॥

[ पदभाष्यम् ] [ पृ. ७ ] **असावेवंविशिष्ट इति** । अयमाशयः । मन-

आदीनां प्रेरकः क इति प्रश्नस्यायं देवदत्तादिः प्रेरक इति प्रतिवचनेन भाव्यमत्र तु श्रोत्रस्य श्रोत्रमित्यादि प्रतिवचनमुक्तं तदननुरूपमिति शङ्का। समाधानं तु यथा लविता(खण्डकः)-स्वव्यापारवांल्लवनसाधनभिन्नो लोकेऽस्ति तद्वदत्र श्रोत्रादिव्यतिरिक्तस्तत्साधनवान् स्वव्यापारवांश्चान्यो नास्ति किन्तु श्रोत्रादीनां संहतानामालोचनसंकल्पनिश्चयस्वरूपेण व्यापारेण तद्भिन्नस्तदसंहतश्च कश्चिच्चेतनावाननुमीयते। अनुमानप्रकारश्चेत्थं—श्रोत्रादयः स्वविजातीयस्याङ्गभूताः संहतत्वाद्गृहादिवत्। अनेनानुमानेन श्रोत्रादीनामङ्गी सिद्धः। यदि सोऽपि संहतः स्यात्तर्हि गृहादिवदचेतनः स्यात् ततस्तस्याप्यन्योऽङ्गी तस्याप्यन्य इत्यनवस्था स्यादतस्तत्परिहारायासंहतश्चेतनो गम्यते ततस्तं सर्वसाक्षिणं लक्षयितुं युक्तमेवेदृशं प्रतिवचनमिति। **अवगम्यत इति**। नित्यज्ञानव्यञ्जकत्वात्। फलावसानस्य फलनिष्पत्तेर्लिङ्गं व्यापारस्तेन तदङ्गी लक्ष्यत इत्यर्थः। [ पृ. ८ ] **असंहत इति**। श्रोत्रादिभिरिति शेषः। [ पृ. ९ ] **विद्वद्बुद्धिगम्यमिति**। अत्र विद्वत्पदेन ब्रह्मनिष्ठो ग्राह्यः। **आन्तरेणेति**। हृदयगुहायां विद्यमानेनेत्यर्थः। **चैतन्यज्योतिषादीपितम्**। अदीपितमिति च्छेदः। **निर्देष्टुमिति**। " निर्देशे प्रथमा प्रोक्ता सैव चामन्त्रणेष्वपि " इत्युक्तेः। रथादिवत्प्राणस्याचेतनत्वादित्याह-**नहीति** [ पृ. १० ] **सामर्थ्यादिति**। ज्ञात्वामृता भवन्तीति वाक्ये ज्ञानेनामृतत्वप्राप्तिरुच्यते। ज्ञानस्य च श्रोत्राद्यात्मभावत्यागमन्तरेणासंभवाच्छ्रोत्राद्यात्मभावस्त्यक्तव्य इत्यर्थः। **विशिष्टधीमत्त्वमिति**। विशिष्टधीः सर्वं ब्रह्मेति बुद्धिः। अतिमुच्येत्यस्यार्थान्तरमाह-**अथवेति**। पूर्वस्मिन्पक्षे जीवन्मुक्तिरस्मिन्पक्षे विदेहमुक्तिर्बोध्यते। " न तस्य प्राणा उत्क्रामन्ति " इति श्रुत्या शरीरान्तरोत्पत्तौ कारणाभावात्प्रारब्धकर्मणां भोगेन क्षयाच्छरीरपाते विदुषो मुक्तिरवश्यंभाविनी ॥ २ ॥

[ वाक्यभाष्यम् ] [ पृ. ७ ] **निमित्तत्वार्थमिति**। विशेषरहित आत्मा मनआदिप्रवृत्तौ निमित्तभूत इत्यर्थः। **विक्रियादिविशेषरहितस्येति**। क्रियागुणसंबन्धानां विशेषाणां व्यावर्तकधर्माणामात्मनि दर्शयितुमशक्यत्वात्क्रियादिमत्वे च घटादिवदनात्मप्रसंगादिति भावः। अनुगमं प्रश्नपूर्वकमाह—**कथमित्यादिना**। **शब्दोपलब्धृरूपतयेति**। शब्दाधिगन्तृस्वरूपतयेत्यर्थः। अयं भावः। शक्तिश्च सत्तावतः प्रकाशमानस्यैव पदार्थस्य भवति नाविद्यमानस्य वन्ध्यापुत्रादेः। " अस्ति भाति प्रियं रूपं नाम चेत्यं-

शपंचकम् । आद्यत्रयं ब्रह्मरूपम् " इत्युक्त्या सत्तावान्प्रकाशवांश्चात्मैव न श्रोत्रादीनीन्द्रियाणि । तत आत्मन एव शब्दावभासकत्वशक्तिर्नेन्द्रियाणां तत्र भासमाना त्वात्मनिमित्तेति । क्षत्रस्य—क्षत्रियजातिविशिष्टपुरुषस्य । क्षत्रं—क्षात्रं कर्म । **तद्वदिति** । उपलब्धुरात्मनः सर्वव्यापित्वेन संबन्धाच्छ्रोत्रादिषूपलब्धृत्वव्यवहारः । [ पृ. ८ ] बुद्ध्वेति । अस्याध्याहृतस्य पदस्यामृता भवन्तीत्यनेन संबन्धः । तादात्म्येनाध्यारोपितो योऽनवबोधनिमित्तोऽज्ञाननिमित्तो बुद्ध्यादिः संसारस्ततो मोक्षणं तादात्म्याध्यासनिवृत्तिर्दृष्टं फलम् । अमृता भवन्तीति विदेहमुक्तिरदृष्टं फलम् [ पृ. ९ ] **अन्यस्मिन्निति** । शरीर इति शेषः । **अप्रतिसंधीयमान इति** । कर्मरूपनिमित्ताभावाच्छरीरान्तरं स्वीकर्तव्यमिति निवेशाभावादित्यर्थः । कर्माणि कदा शरीरान्तरमुत्पादयन्ति तदाह—**सतीत्यादिना** । **सर्वकर्मारम्भेत्यादि** । सर्वेषां यज्ञादिकर्मणां य आरम्भस्तत्र निमित्तभूतं वर्णाश्रमवयोऽवस्थाद्यभिमानरूपमज्ञानं तद्विपरीतात्मविद्या तत्स्वरूपेणाग्निना विप्लुष्टत्वाद्दग्धत्वात्कर्मणां संबन्धो नोपपद्यत इत्यर्थः । अत्र कर्मणामिति षष्ठ्या नोपपद्यत इत्यनेनाध्याहृतेन संबन्धः । ननु कृतकत्वादिदममृतत्वमनित्यमिति शङ्कां निराकुर्वन्नाह—**शरीरादिति** । अनादिसंसारपरंपरयाहं पूर्वं शरीर्यभूवं पश्चाच्च भविष्यामीति यः शरीरादिप्रवाहस्तत्सातत्यं यत्तस्य प्रतिसंन्धानं धर्माद्यधिकारित्वाध्यासः कामादिदोषकल्पनं चैतदपेक्षयाध्यारोपितो यो मृत्युस्तदपेक्षयामृतत्वस्योक्तिस्तेषामौपचारिकी । वस्तुतस्तु ते पूर्वमेवामृता इत्यर्थः ॥ २ ॥

[ प्रकाशिका ] [ पृ. १४ ] **लिङ्गदेहं हित्वेति** । एतन्मते जीवन्मुक्तिर्नाङ्गीक्रियते केवलं विदेहमुक्तिरेवात एवमुक्तिः । श्रीभाष्ये समन्वयाधिकरणे श्रीरामानुजाचार्यैरेवंप्रकारेण जीवन्मुक्तिः खण्ड्यते । तथाहि—का चेयं जीवन्मुक्तिः । सशरीरस्यैव मोक्ष इति चेन्माता मे वन्ध्येतिवदसंगतार्थवचनम् । यतः सशरीरत्वं बन्धोऽशरीरत्वमेव मोक्ष इति त्वयैव श्रुतिभिरुपपादितम् । अथ सशरीत्वप्रतिभासे वर्तमाने यस्यायं प्रतिभासो मिथ्येति प्रत्ययस्तस्य सशरीरत्वनिवृत्तिरिति । न । मिथ्येतिप्रत्ययेन सशरीरत्वं निवृत्तं चेत्कथं सशरीरस्य मुक्तिः । अजीवतोऽपि मुक्तिः सशरीरत्वमिथ्याप्रतिभासनिवृत्तिरेवेति कोऽयं जीवन्मुक्त इति विशेषः । अथ सशरीरत्वप्रतिभासो बाधितोऽपि यस्य द्विचन्द्रज्ञानवदनुवर्तते स जीवन्मुक्त इति चेन्न ब्रह्मव्यतिरिक्तसकलवस्तुविषयकत्वाद्बाधकज्ञानस्य । कारणभूताविद्याकर्मादि-

दोषः सशरीरत्वप्रतिभासेन सह तेनैव बाधित इति बाधितानुवृत्तिर्न शक्यते द्विचन्द्रादौ तु तत्प्रतिभासहेतुभूतदोषस्य बाधकज्ञानविषयीभूतचन्द्रैकत्वज्ञानाविषयत्वेनाबाधितत्वाद्द्विचन्द्रप्रतिभासानुवृत्तिर्युक्ता । किंच "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" छां. ६।१४।२ इति सद्विद्यानिष्ठस्य शरीरपातमात्रमपेक्षते मोक्ष इति वदन्तीयं श्रुतिर्जीवन्मुक्तिं वारयति। सैषा जीवन्मुक्तिरापस्तम्बेनापि निरस्ता "वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् । बुद्धे क्षेमप्रापणम् । तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धे चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत । एतेन परं व्याख्यातम्" आ. ध. सू. २।९।२१।१३–१७ इति अनेन ज्ञानमात्रान्मोक्षो निरस्तः । अतः सकलभेदनिवृत्तिरूपा मुक्तिर्जीवतो न संभवति ॥२॥ ३।४। ९।६।७।८॥

अथ प्रथमखण्डे तृतीयमन्त्रः ॥ १।३ ॥

[पदभाष्यम्] [पृ. १०] ननु सर्पाद्यधिष्ठानभूता रज्जुर्यथा विषयरूपा तथा श्रोत्राद्यध्यासाधिष्ठानभूत आत्मा विषयभूतः स्यादिति शङ्कां निवर्तयितुमाह—**यस्मादिति** । आदिमध्यावसानेष्वव्यभिचारादध्यस्तस्याधिष्ठानमेव स्वरूपं विषयता च न पदार्थधर्मस्ततोऽप्रयोजकः शङ्काकर्तुर्हेतुरित्यर्थः। ननु तर्हि ब्रह्मणोऽविषयत्वाच्छास्त्राचार्योपदेशोऽपि तद्विषयको न संभवतीति चेत् । इष्टापत्तिः । स चोपदेशोऽपि न वास्तव इत्याह—**इन्द्रियमनोभ्यां हीति** [पृ. ११] **जातिगुणक्रियाविशेषणैरिति** । ब्राह्मणोऽयमिति जातित उपदेशः । शुक्लोऽयमिति गुणत उपदेशः। पाचकोऽयमिति क्रियात उपदेशः। राजपुरुष इति विशेषणत उपदेशः। "चतुष्टयी शब्दानां प्रवृत्तिः" इति पातञ्जले महाभाष्ये तु शब्दप्रवृत्तिबीजत्वेन चतुर्णां जातिगुणक्रियासंज्ञानां ग्रहणं तत्र जातिगुणक्रियाणामीदृशान्येवोदाहरणानि संज्ञायास्तु डित्थोऽयमित्युदाहरणम् । संज्ञाया विशेषणमध्यपातान्न पातञ्जलभाष्येणास्य विरोधः। नन्वेवमनुपदेश्यतैव प्राप्नोति चेन्न । यतः शिष्यस्याज्ञत्वेन भेदग्रहोऽस्त्येव । आचार्यस्यापि तदीयभेददृष्ट्या व्यावहारिक उपदेश आगमतः संभवतीत्याह—**अत्यन्तमेवेत्यादिना** । **विदितं नामेति** । विदितमिति कर्मणि क्तः । कर्म च "कर्तुरीप्सिततमं कर्म" पा. सू. १।४।४९ इति सूत्रेण कर्तुः क्रिययाप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यादित्यर्थकेन निरुक्तं तदेव स्पष्टमुच्यते विदिक्रिययाति-

प्रतिपादितं तत्र यो विरक्त उत्तमाधिकारी शिष्यः स आचार्यं परमरहस्यं पृष्टवानित्यर्थः ॥ ४ ॥ ६ ॥

[ वाक्यभाष्यम् ] [ पृ. ४४ ] **वनतेस्तत्कर्मण इति** । वनु संभजन इत्यस्य रूपं तेन वनु धातुः संभजनकर्मा । संभजनार्थक इति यावत् । **गौणमिति** । गुणादागतं गौणं यौगिकं न रूढमित्यर्थः । **सेवन्ते स्मेति** । अत्र स्मेतिपदं निरर्थकं केवलं वाक्यालंकारकं भूतकालवाचिनोऽर्थस्येहानन्वितत्वात् ॥ ४ ॥ ६ ॥

[ प्रकाशिका ] [पृ.४०] **अन्वर्थमिति** । अर्थमनुगतं यथार्थम् । **ततत्वादिति** । तनु विस्तारे इत्यस्य [ पृ. ४४ ] वनु संभक्तावित्यस्य च रूपम् । तथा च तद्वनमितिशब्दस्य व्यापकं भजनीयं चेत्यर्थः । तद्विशदयति–**तनोतेरिति** । **इत्यत्प्रत्यय इति** । व्याकरणान्तरस्थं वचनमेतत् । **वनतेरकार इति** । वनेत्यकारान्तशब्दः कथमपि साध्य इत्यर्थः ॥ ४ ॥ ६ ॥

## चतुर्थखण्डे सप्तममन्त्रः ॥ ४ ॥ ७ ॥

( पदभाष्यम् ) [ पृ. ४१ ] **उत्तरार्थमिति** । श्रोत्रस्य श्रोत्रमित्यनेनोक्तोपनिषत् । सैवेदानीं मयोक्तेति शिष्यं प्रत्याचार्योऽवधारणपूर्वकं निर्दिशति विद्याप्राप्त्युपायानामुत्तरेषां तपआदीनां विधानार्थम् । अतो न पुनरुक्तिः । विद्यातु निरपेक्षैवातः सा प्रथममुक्ता । तपआदिसाधनविधानार्थमेवोक्तविद्याया अवधारणमिति प्रश्नमुखेन स्फुटयति–**परमात्मविषयामिति** । **फलवचनेनोपसंहार इति** । संपूर्णतया विद्याया अनुक्तौ फलकथनमसंगतं भवेदित्यर्थः । **तस्मादिति** । उपनिषच्छेषः–उपनिषदङ्गम् । अनवशेषितत्वात्–समापितत्वात् । **किं पूर्वोक्तेति** । श्रोत्रस्य श्रोत्रमित्याद्युपनिषदङ्गत्वेनान्यानि सहकारिसाधनान्यपेक्षते नो वा । **पिप्पलादवदिति** । प्रश्नोपनिषदीयमाख्यायिका–सुकेशादयः षण्महर्षयो ब्रह्मान्वेषणं कुर्वन्तः पिप्पलादमहर्षिं समुपसन्नाः । तान्स पिप्पलादो ब्रह्मविषयमुपदिदेश । अन्ते चैतावदेवाहं ब्रह्म वेद नातः परमस्तीत्युवाच । तद्वदत्राप्याचार्येण नातः परमस्तीति वक्तव्यमित्यर्थः । समाधत्ते–**एतदुपपन्नमिति** । [ पृ. ४२ ] **वेदैरिति** । अयमर्थः । तस्यै तपो दम इति मन्त्रे वेदानां तदङ्गानां च तपआदिभिः सह पाठः कृतः परं वेदास्तदङ्गानि च न ब्रह्मविद्याप्राप्त्युपायभूतानि तत्सामान्यात्तपआदीन्यपि न ब्रह्मविद्याप्राप्त्युपायभूतानि । योग्य-

तानुसारं तपआदीनां ब्रह्मविद्याप्राप्तावङ्गाङ्गिभावः कल्प्यते सहपाठोऽकिंचित्कर इति शंकते—**सहपठितानामपीति** । एवं विभागपूर्वकं विनियोगः कर्तव्यस्तथा चार्थसंबन्ध उपपद्येत । स च विभाग इत्थम् । तपःप्रभृतीनां विद्यांगत्वेन विनियोगः । वेदानां तदंगानां चार्थप्रकाशद्वारा कर्मात्मज्ञानोपायत्वम् । एवं सहकथनेऽपि पृथग्विनियोगे श्रौतं दृष्टान्तमाह—**यथा सूक्तवाकानुमन्त्रणमन्त्राणामिति** । "अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्" इत्यादिनैव सूक्तवाकेन सर्वयागसमाप्तौ देवतानुमंत्रणं क्रियते । यद्यप्यस्मिन्सूक्तवाके बह्व्यो देवताः पठ्यन्ते तथापि यस्मिन्यागे या देवताहूता तस्या एव विसर्जने योग्यतावशात्तस्य सूक्तवाकस्य विनियोगः । सूक्तवाकानुमंत्रणमंत्राणामित्यत्र सूक्तवाकेनानुमंत्रणमिति तृतीयासमासः । **नायुक्तेरिति** । युक्तिर्घटना तस्या असंभवात् । प्राञ्चति—गच्छति । अञ्चु गतिपूजनयोरिति धातोः प्रोपसृष्टस्य रूपम् । सूक्तवाकानुमंत्रणमन्त्रेषु योग्यतायाः सत्त्वात्तथा व्यवस्थायामप्यत्र कर्मणां विद्याविरुद्धत्वेन योग्यताभावात्तथा व्यवस्थाया असंभवादित्यर्थः । तमेव योग्यताभावं स्पष्टयति—**नहीति** । **निःश्रेयसस्येति** । एवं च ब्रह्मविद्यायास्तत्फलस्य कर्मवैलक्षण्यमित्यर्थः । **प्रश्नप्रतिवचनस्येति** । उपनिषदमब्रूमेति गुरूक्तप्रश्नोत्तरवाक्यस्य ॥४॥७॥

( वाक्यभाष्यम् ) [ पृ. ४१ ] ब्राह्मीत्यस्य व्याख्यानं—**ब्राह्मणजातेरिति** । ब्राह्मणजात्यनुष्ठेयां विद्यामात्मसाधनभूताम् । [ पृ. ४२ ] अब्रूमेत्यस्य भविष्यकालिकमर्थमङ्गीकुरुते व्यवस्थापयति च—**ब्राह्मी नोक्तेत्यादिना** । **भूताभिप्राय इति** । भूतकालसंबंधिक्रियाविशिष्टोऽत्राब्रूमेति शब्दो न किन्तु भविष्यकालसंबंधिक्रियाविशिष्टः ॥ ४ ॥ ७ ॥

( प्रकाशिका ) [ पृ. ४२ ] श्रुतिस्थोत्तरालोचने पक्षत्रयं संभवति तदाह—**किमुपनिषत्प्रतिपाद्यमिति** ॥ ४ ॥ ७ ॥

चतुर्थखण्डेऽष्टममन्त्रः ॥ ४ ॥ ८ ॥

( पदभाष्यम् ) [ पृ. ४३ ] **अमृदितकल्मषस्येति** । अविनष्टपातकस्य । **यथेन्द्रेत्यादि** । चतुर्थपर्यायपर्यन्तमिन्द्रस्य प्रजापतिबोधितब्रह्मविषयिणी प्रतिपत्तिर्ज्ञानं नासीत्तस्यैव प्रजापतेर्वाक्याद्विरोचनस्य तु प्रथम एव पर्याये विपरीता देहात्मप्रतिपत्तिरभवदियं कथा छान्दोग्येऽष्टमाध्यायेऽष्टमखण्डेऽस्ति ।

## केनोपनिषत्पदभाष्येऽलब्धस्थलानि वचांसि.

## केनोपनिषद्वाक्यभाष्ये लब्धस्थलानि वचांसि.